शिवप्रसादो भारद्वाजः
23.10.88

# तरङ्ग-लेखा

## ( कविता-संग्रहः )

प्रणेता :

**डॉ० शिवप्रसादो भारद्वाजः**

शास्त्री, साहित्याचार्यः, एम० ए०, एम० ओ० एल्०,
पी-एच्० डी०, डी० लिट्०, साहित्य-रत्नम्

प्राध्यापक :

पञ्जाब विश्वविद्यालयीय विश्वेश्वरानन्दविश्वबन्धु-
भारत-भारती-अनुशीलन-संस्थान होशियारपुर

प्रथमावृत्ति : ५०० ] १९८४ [ मूल्य : १६.००

● प्रकाशक :

विनोद कुमार भारद्वाज

● प्राप्ति स्थान :

ई—१, यूनिवर्सिटी क्वार्टर्स,
ऊना मार्ग, होशियारपुर (पञ्जाब)



● मुद्रक :

श्री देवदत्त शास्त्री, विद्याभास्कर,
वी० वी० आर० आई० प्रैस,
साधु-आश्रम, होश्यारपुर,
(पंजाब, भारत)।

"सत्यं वदन्ति जनता जनतापकारी
शक्ताद् बिभेति निबलान् समदः क्षिणोति ।
शैले यथा विहत-वेग उदीर्ण-शृङ्गे
त्वं शैलजां नवलतामुदमूलयस्ताम् ॥"

# निवेदनम्

अवितथमेव संस्कृतवागियं देववाणी अहताऽपि या बहुधा विकटतरैं झंझानिलैर्न मनाक् प्रचलति, अकम्प्रमिदं ज्योतिर्न यस्य शिखा प्रकम्पनैरपि निर्वाप्यते । अत एव अस्तङ्गतेऽपि आर्य-स्वातन्त्र्य-सूर्ये नीलकेतुकैतवेन दास्यान्ध-कारान्धतमस इवावृण्वति भारतं यवन-शासने श्रीहर्ष-विश्व-नाथ-अप्पय्यदीक्षित-जगन्नाथपण्डितेन्द्र-सदृशाः कविपुङ्गवा भुवमिमामलमकुर्वन् । तदनन्तरमपि श्वेतहूणास्कन्नायामस्यां वसुन्धरायां पाश्चात्यगीर्म्लिष्टवाचि वारुणीमदमत्तप्राये भारतीयजनसमाजे नवशिक्षा-पद्धतिहतप्रायाध्ययनपरम्पराऽपि गीरियममरकल्पवल्लीवाशोषितरसा बालशास्त्रि-शिवकुमार-गङ्गाधर-तात्याशास्त्रि - नित्यानन्दपर्वतीयप्रभृतिभिः सर्व-शास्त्राटवीविहृण्डनाखण्डितसाहसैः पण्डिततल्लजैः प्रति-भाशालिभिः कविवरैश्चाजीवनमसेव्यत नवनवसन्दर्भ-रचनापल्लवितैश्चाविच्छिन्नधारा व्यधीयत । अपहृत-दासतामलीमस इव पुनरप्युदिते भारतस्वातन्त्र्यसूर्येऽवि-च्छिन्नेऽपि चांग्लीमोहोपरागे न तावज्जनमानसं सर्वथा विरक्तमभूत् संस्कृते। तत एवाद्यापि भूयांसस्तत्सेवाहेवाकिनो नानाविधाः कृतीर्निर्माय प्रकाश्य च प्रतिवत्सरं संवर्धयन्त्येवादसीयभाण्डागारं काव्यरत्नैः । तस्यामेव दिशि च प्रस्तुतकाव्याकारो लघीयानयं प्रयासः प्रणेतुः

काले काले रचितानां काव्यरचनानां सङ्ग्रहरूपेण प्रकाशमानीयते।

साहित्यं जीवनेन सम्बद्धं सदैव तस्य प्रतिबिम्बता-मर्हति। यादृश्यां स्थितौ च कवयिता वर्तते तस्याः प्रभावेण सर्वथाऽसंसृष्टो न स स्थातुं प्रभवति। अतः सङ्ग्रहेऽस्मिन् तादृशः प्रभावो यत्र तत्र लक्ष्यते चेत् नासौ दोषदृष्टचा गण्येत।

अपरिमितवाग्वैभवानां पुरातनानां भारती-पुत्राणां वाङ्निष्यन्द एवेदानीन्तनानां मेयवचसां काव्यकृतां प्रेरणास्रोत इति कृतावस्यां कश्चित् संवादस्तैः सह स्यादपि चेन्नैतच्चित्रम्। परम् अण्वपि लेखकोपज्ञं किमपि समीक्षकैराघ्रायतेऽभिनन्द्यते च गुणाग्रहग्रहिलैरित्यपि जनोऽयमाशास्ते।

शेषभणितिपारावारीणै र्विविधशास्त्रमर्म-वर्मच्छेद-पटुभिर् डॉ० मुनीश्वरमहोदयैर्यत्रतत्र पटुपरामर्शदानेनानु-गृहीतोऽयं जनोऽस्य सङ्ग्रहस्य प्रसङ्ग इति तेषां प्रसादं सहर्षं स्वीकरोति।

अन्ते च सहृदयकरकमलाञ्जलावुपस्थापयन् कृतिमिमां मुधा पल्लविताद् विरमति

विदुषामाश्रवः

शिवप्रसादो भारद्वाजः

## विषय-सूची

# आशंसा

संस्कुर्वञ्जनमानसानि सततं संस्कार-संस्कारकम्
विश्वस्याचरदादिशन् मनुजताचारांस्तथाचार्यकम् ।
काव्याम्भोधि-सुधामथामुपहरत् सत्साहिती-सौहितीं
लोकस्यच्छंतु संस्कृतं तु जगते प्रीतिं परां संस्कृतो ॥

भावामोदसमुद्रमुद्रणविमुक्-चेतोऽम्बुजोल्लासिनी
शब्दार्थोच्चयचारुसारगुणवद्देहप्रभोद्भासिनी ।
माकन्दाधरण-प्रवीण-सुरसोद्यन्माधुरी-धारिणी
जीयात् सा विबुधानन-प्रणयिनी सत्काव्यमन्दाकिनी ॥

जय संस्कृत संस्कृत-चित्त-रुचे वरसंस्कृति-संस्कृति-कर्मशुचे ।
सुखदर्शन-दर्शन-बद्ध-रते जनमानसमानय भद्रगते ॥

ऋतु-विहारः—

## ग्रीष्म-विक्रमः

प्रतापमासाद्य मधोः सुरिक्थं
संवर्ध्य च स्वेन गुणेन भूयः।
भूपो यथा लब्धनवाभिषेको
निदाघकालः समुपागतोऽयम् ॥ १ ॥

प्रचण्डरश्मिर्हि खरैर्मयूखै-
स्तपत्यशेषां धरणीं सयत्नः।
यदुष्णिमानं परिवर्ज्य कश्चित्
स्पर्शो नहि स्पृश्य-पदं प्रयाति ॥ २ ॥

यदेव वासः खरभारतुल्यं
पुरोढमप्यप्रचुरं प्रतीतम्।
तदेव लज्जावरणाय लोकै-
रवार्यमित्येव तु धार्यतेऽद्य ॥ ३ ॥

यः शीतिमोद्वेगकरो जनानां
पुराऽभवद् यत्न-निवारणीयः।
स एव तुङ्गानधिरुह्य शैलान्
विमृग्यतेऽपि प्रचुरव्ययेन ॥ ४ ॥

न कामरूपीमतिरिच्य पूर्वं
ये पस्पृशुः शीतलमम्बु जातु।
निपीय ते वारि सरांसि रिक्ता-
न्यद्योदरं वा सर आचरन्ति ॥ ५ ॥

भ्रमिं रजोदण्डमयीं तु वात्या
वितत्य मार्गेषु नटीव काचित् ।
जनान् पटालीन-मुखान् विधाय
दृष्टिं परेषां कलुषीकरोति ॥ ६ ॥

वातः प्रतप्तोऽर्ककरैः प्रचण्डे
रुजो ज्वराद्या जनयञ्जनानाम् ।
रजस्वलः सर्वदिशो विदूष्याऽ-
व्वस्थं रजो गेहगतं करोति ॥ ७ ॥

हिमानिकाऽऽश्लेषकरः प्रवातः
सह्यो न हेमन्त ऋतौ य आसीत् ।
स एव विद्युद्-व्यजनैरिदानी-
मामन्त्र्यते नैति च काङ्क्षितोऽपि ॥ ८ ॥

पुरेषु सम्बाधतरेषु लोका
विना प्रवातं तपनोपतप्ताः ।
विद्युत्प्रकोपे व्यजनं पुरःस्थं
समभ्यसूयन्ति तु निःश्वसन्तः ॥ ९ ॥

जना दिवा ताप-भयाद् गृहेषु
गुहास्विवालीय तमोमयेषु ।
अस्तङ्गते भास्वति वीतशङ्का
उलूकतुल्या वहिरापतन्ति ॥ १० ॥

धन्या अमी भूमिरुहा इदानीं
तापं समस्तं तपनेन सृष्टम् ।
वहन्ति मूर्ध्ना शरणागतांश्च
च्छायातले साधु सभाजयन्ति ॥ ११ ॥

छाया तरूणामधनानुकूला
सन्ताप-शान्ति तनुते जनानाम् ।
तापं समस्तं तपनोपसृष्टं
सुशीतला तूर्णमपाकरोति ॥ १२ ॥

द्विचक्रिकायानमसावधस्तात्
तरोरवस्थाप्य तले तदीये ।
छायासुखे सम्प्रति चालकोऽस्य
मध्याह्नकाले स्वपिति श्रमार्तः ॥ १३ ॥

विद्युत्प्रभावेण च शीतवाता-
तपानुकूले भवने वसन्तः ।
श्रियः प्रिया ग्रीष्ममपि प्रचण्डं
हेमन्त-भावं तु समानयन्ति ॥ १४ ॥

हिमीकृतं क्षीरमथाम्बु शीतं
फलान्युदश्विद् दधि वाऽवलेहः ।
प्रपानकं चाऽपि तपे जनानां
सन्ताप-शान्त्यै प्रगुणीभवन्ति ॥ १५ ॥

अद्य त्रियामा अपि न त्रियामा
न निद्रितानां प्रभवन्ति तृप्त्यै ।
निशायमानानि दिनानि तेषां
प्रजागरोत्थं क्षपयन्ति खेदम् ॥ १६ ॥

उशीरमय्यो यवसाचिता वा
तिरस्करिण्यः सलिलेन सिक्ताः ।
समीर-सङ्गेन गृहाणि कृत्वा
शीतानि, तापं प्रणुदन्ति सद्यः ॥ १७ ॥

स्नानं सुशीतेन जलेन नित्यं
सरित्तटाकेषु चिरं विहारः ।
शीतानि पेयानि मरुत्तरङ्गा-
श्चन्द्रातपः शान्तिकराणि चाद्य ।। १८ ।।

## वर्षर्तु-विलसितम्

लोकं तपन्तं स्वकरैः प्रचण्डैः
खरांशुमत्याचरणाद् निगृह्णन् ।
पयोदजालं गगने वितन्वन्
वर्षर्तुकालः समुपागतोऽयम् ।। १ ।।

बलाहका लब्ध-समृद्धि-कान्ताः
कान्ता-सनाथा गगन-प्रतोल्याम् ।
समीर-यानान्यधिरुह्य वाह-
धावस्य लीलां किमु दर्शयन्ति ।। २ ।।

कदम्बवृक्षाः प्रचित-प्रसूनै-
र्विभान्ति किं कान्दविका इवामी ।
स्थाले समायोज्य हि मोदकानि
क्रेतॄणि कुर्वन्ति विलोचनानि ।। ३ ।।

अमी गिरीन्द्रा उपलभ्य धारा-
साराभिषेकं हरिताङ्कुराणि ।
तन्वा दधाना नवलाम्बराणि
स्व-राजतां साधु समर्थयन्ति ॥ ४ ॥

कलापिनो वीक्ष्य पयोधरान् खे
नानाकृतीन् संचरतः सलीलम् ।
निशम्य चैषां स्तनितं गभीरं
नृत्यन्ति मुञ्चन्ति च चारु केकाः ॥५॥

शतह्रदाऽङ्केऽम्बुमुचां लुठन्ती
मुहुर्विमुञ्चन्त्यथ भीमनादान् ।
व्यनक्ति रोषं स्वनिरोधमूलं
न मानिनी साऽनुरुणद्धि रागम् ॥ ६ ॥

नदी-सरः-पुष्कर-तीर-संस्थाः
समाहितात्मान उदस्त-चेष्टाः ।
आध्मातवायुस्वरपूर्णकण्ठा
भेकाः श्रुतेः पाठमिवारटन्ति ॥ ७ ॥

अमी निसृष्टार्थहरास्तरूणा-
मादाय गन्धं सपराग-पुञ्जम् ।
अनुद्रुताः सारहरैर्द्विरेफै-
श्चतुर्दिशं सम्प्रसृताः प्रवाताः ॥ ८ ॥

घनाघनानां सघना घटास्ता
निशाचराणां पृतना इवोग्राः।
नीलं नभो दुर्गमिवोर्णुवन्ति
यथा न वातो लभतेऽवकाशम् ॥ ९ ॥

लताः शिरःस्नान-सुसौम्य-देहाः
सुशीकरान् पल्लव-भाजनेषु।
आदाय भास्वन्तमभि स्थितास्ताः
सश्रद्धमर्घं वितरन्ति तस्मै ॥ १० ॥

पयो विमुञ्चन्ति पयोमुचः क्वचि-
ल्लयावहं क्वाऽपि न बिन्दुमात्रम्।
यथा कृपापात्रपुषोऽनुकम्प्यान्
पुष्णन्ति नान्यानपि कृच्छ्रवृत्तीन् ॥ ११ ॥

पयोधरैर्मुक्तचरः खरांशुः
खरांशुतामेव निजां व्यनक्ति।
न यत् खरः केवलमध्वगानां
गृहस्थितानामपि सोऽविषह्यः ॥ १२ ॥

अजस्रवृष्टाः खलु वारिधारा
विप्लाव्य भूमिं सकलां समन्तात्।
विलानि खातानि च ता विशन्त्यः
प्रकुर्वते डुब्-डुब-डुब्-डुबेति ॥ १३ ॥

गण्डूपदाः क्वापि विकीर्णदेहाः
क्वचिच्च भेकाः परिवृक्णकायाः ।
सृष्टिः प्रभूता मशक-प्रजानां
क्वचिद्विचित्रा क्षितिरिन्द्रगोपैः ॥ १४ ॥

निशासु मग्नेन्दुभचक्रभास्सु
खद्योत-पङ्क्तिः किल सञ्चरन्ती ।
न कल्पते हन्त ! तमो विहन्तुं
दरिद्रतां श्रीरिव दृष्टमात्रा ॥ १५ ॥

वातायनेभ्यः शिशिरः प्रवातः
सशीकरो वृष्टि-पयः-प्रसङ्गात् ।
प्रविश्य सद्मानि सुखाकरोति
स्विन्नानि देहानि तपार्दितानाम् ॥ १६ ॥

तप्तां महीं वृष्टिकणाः पतन्तः
कुर्वन्ति पूर्वं वहुगन्धसान्द्राम् ।
उष्माणमुद्गीर्य कथां स्वकीयां
तापस्य लोकाय निवेदयन्तीम् ॥ १७ ॥

रसालमासाद्य रसालवालं
मधूपमं सौरभ-सम्भृतञ्च ।
लोकाः सुतृप्तास्तु रसान्तराय
जम्बूफलं भृङ्गसमं स्वदन्ते ॥ १८ ॥

ग्रामेषु पद्याः क्वचिदप्सु मग्नाश्
छन्नाः क्वचिद् दर्भ-तृणप्रतानैः ।
दुःसञ्चराः कर्दम-सञ्चयेन
क्षुण्णा अपि क्लेशकृतो भवन्ति ॥ १९ ॥

## शरत्कालः समायातः

प्रवृष्योपारतो मेघः प्रनृत्तोपारतः केकी,
क्षयं यातोऽधुना मायूर-मद ऊष्मा तथोद्रेको ।
परीक्षान्ते श्लथ-श्रद्धा यथा छात्रावली ग्रन्थे;
रटित्वाऽनारतं लुप्तस्वरा जाता तथा भेकी ॥

फलं दत्त्वाऽतुलं लोकाय विद्युद्-दीप्त-तनुयष्टेः,
गता कादम्बिनी नीलाम्बरा विश्रम्य रस-वृष्टेः ।
वलक्षैः केशकाशैस्तोयदैश्च व्यक्तवार्धक्यैः,
प्रवक्तीवाऽस्थिरं प्रावृड् वयो रूपं तथा सृष्टेः ॥

पुनः श्रद्धाऽधुना वृद्धा सुकृषकाणां तथा कूपे,
प्रकृष्टं वर्धते भक्तिः कुमारीणां यथा रूपे ।
बका नेतार इव शुभ्रांशुका गम्भीर-मुद्रायां,
रता आहार-चिन्तायां परिक्लिष्टोदकेऽनूपे ॥

घनाः शुभ्राऽम्वरा वाग्डम्बराः कोशेषु निःसाराः,
क्वचिन् मुक्त्वा कणान् कृपणा इव प्रध्वानितोद्गाराः।
न शृण्वन्ति ध्रुवं ते चातकानां याचिताऽऽक्रन्दं,
यथा प्रभवो न भृत्या-वृद्धि-शब्दं दत्तहिङ्काराः॥

सुनम्राः शालयो मूर्ध्ना दधाना मञ्जरी-भारं,
प्रजा इव पीडिता अनुभूय वृद्धं मूल्यकरभारम्।
सरः-सरितां तु घर्मान्ते समन्तात् संभृतं तोयम्,
घनान्ते वैतनिकधनवद् दशाहेनैति संहारम्॥

प्रसन्ना द्यौरथो पृथ्वी शरत्कालः समायातः,
प्रदुग्धे चाऽमृतं ज्योत्स्ना शरत्कालः समायातः॥
सुभिक्षस्याऽऽशया लोकस्य हृदयं क्लान्तमुच्छ्वसितम्,
अलक्ष्मीं संहरन् भव्यः शरत्कालः समायातः॥

# हेमन्तच्छटा

अयं जगन्ति कम्पयन् मरुत् प्रवाति हैमनः
सुखावहो विलासिनामृतुश्चकास्ति हैमनः।
निशा निदाघवासरायता विभाति हैमनी
सुधर्मशर्मदा तनौ रवेर्विभा च हैमनी ॥ १ ॥

तुषारपुञ्जनिर्गतो नु शीतरश्मिवीजितो
हिमानिकाहिमीकृतो नु मारुतोऽतिशीतलः।
प्रभाकरः प्रभाकरः कृतोऽथवा हिमाकरो
दिने कुहाखिलीकृते स संज्ञयैव भास्करः ॥ २ ॥

अहो ! निदाघधामनि प्रलीनघर्म-धामनि
प्रकीर्ण-केश-केशरा विहीनपर्णकाम्बरा।
तुषारदग्धदेहिनी न भाति चारु पद्मिनी
न शोभते वितेजसि प्रिये कदापि भामिनी ॥ ३ ॥

तुषारपात-विश्लथं समीक्ष्य पद्मकुड्मलं
मरन्दपान-लोलुपः पिपासितो मधुव्रतः।
क्वणत्-प्रिया-कल-प्रगीत-मोदमान-मानसः
५ रोति कुन्दसार-माधुरीनिपान-कौतुकम् ॥ ४ ॥

क्वचित् पलालसंस्तरे निवात-शर्मदे गृहे
हसन्तिकाप्रदीप्तचित्रभानुसेकसंस्थुलः ।
विभुग्न-जानुकोदरः प्रपीतधूम्रवर्तिको
यथाकथं निशां नयत्यपुष्कलाम्वरो गृही ॥ ५ ॥

मही तुषार-संवृता सिताम्बरेव कामिनी
हिमाम्बु-घर्म-बिन्दुभिर्विचित्रितेव वल्लरी ।
हिमानिकावलक्षशालशालितुङ्गविग्रहो
गिरिश्चकास्ति वन्दना-रतः क्षमापतिर्यथा ॥ ६ ॥

गुडेक्षुतण्डुलानि वा फलानि शोषितानि वा
तडित्-प्रतापनानि वा कृशानुभाजनानि वा ।
प्रियाङ्गसङ्गनिर्वृतिः स्वकर्मसङ्गतिर्नु वा
भवन्ति लोकशैत्यशान्तिसाधनानि साम्प्रतम् ॥ ७ ॥

अनारतं पिवन्ति केऽपि तप्तकामरूपिकाम्
परे लिहन्ति चामलेहमञ्जसा सुरापिवाः ।
अपैति धूम्रवर्तिका मुखान्न कस्यचित् क्षणं
जनानजामुखानसावृतुः करोति हैमनः ॥ ८ ॥

# शिशिर-विलासः

तनोति सीत्कृतिं मुखे तनौ प्रकम्पमुद्धतं
व्रणं रदच्छदे पुनः प्रदर्शयंश्च रूक्षताम् ।
गृहान्तरं नयत्यनावृते कपाट-सम्पुटे
रतोत्सुकः प्रियो नु किं न भो गुणः स शैशिरः ॥ १

तरूँल्लतासखानसौ करोति नग्नविग्रहान्
हरंस्तदीयवैभवं बलात् प्रवेगमारुतः ।
विदारयत्यथ त्वचं खरः स देहधारिणां
विलुण्ठको नु वर्ण्यते न भो ऋतुः स शैशिरः ॥ २ ॥

घनाघना घनं क्षरन्ति शीतवातवेपिता
रटन्ति दन्तवोणितै रुजं प्रदर्शयन्ति वा ।
विधाय धूमपानमुष्णिमानमाहरन्ति किं ?
कुहामयानि चित्रकम्बलानि धारयन्ति किम् ? ॥ ३ ॥

शतह्रदा बलान्निरुध्य या चिरं तु रक्षिता
घटाकपाटसम्पुटे प्रसह्य वारिवाहकैः ।
युगं समीक्ष्य चेतिता प्रचण्डतां समाश्रिता
सुघोरघर्घरारवा व्यनक्ति रोषमात्मनः ॥ ४ ॥

खरेण चण्डतेजसा दिवा भृशं प्रधर्षिता
सतन्द्रचन्द्र आत्मनोऽप्यशक्ततां विवृण्वति ।
निशाऽऽपि मेचकाम्बरा निमग्नतारका सती
हिमाम्बु-कैतवेन वाष्पदुर्दिनं करोत्यहो ! ।। ५ ।।

उदङ्मुखो दिवाकरो मही च लब्धजीवना
वितन्द्रचन्द्रचन्द्रिका निशा प्रसादमागता ।
विहीनशीतिमक्लमः सरत्यसौ समीरणो
जनस्य मोदमातनोति काल एष शैशिरः ।। ६ ।।

---

## समागता वसन्त-पञ्चमी

इयं वसन्त ! पञ्चमी निशा प्रयाति हैमनी,
भवन्तमागतं समीक्ष्य सा न भाति पञ्चमी ।
रसाल-मञ्जरी-प्रियः पिको विरौति पञ्चमी,
समागता समागता प्रिया वसन्त-पञ्चमी ।।

पराग-पुञ्ज-पिञ्जरो मरन्द-बिन्दु-तुन्दिलः,
प्ररोह-लोल-कुण्डलो मिलिन्द-वृन्द उद्धतः ।
स्फुटत्-कलि-स्वन-ध्वनन्-मृदङ्ग-रङ्ग-मङ्गलो,
-मधूर्मिल-प्रसून-भृत्-प्रिया-करो विनृत्यति ।।

तुषार - विश्लथं रथं किलाऽधिरुह्य मारुतं,
समुल्लसत्परागपुञ्ज - वाजिराजि - राजितम् ।
प्रगीत -पत्रि - भृङ्गवृन्द - वन्दि - नन्दिताऽऽगता,
समागताऽऽम्रमञ्जरी - ध्वजा वसन्त - पञ्चमी ॥

रसाल-शेखरेऽखरे मरन्द-बिन्दु-वन्धुरे,
कुशेशयाऽऽशयेऽक्षयेऽथ पाटला-समुच्चये ।
मधुव्रतैरभिष्टुता तदर्थमाक्षिपत्यहो,
मधुप्रपा-कपाट-संपुटं वसन्तपञ्चमी ॥

जलं नवं, स्थलं नवं, गताम्बुदं वियन्नवं,
सुमं नवं, तृणं नवं, निशा नवा, दिनं नवं ।
मनःसु साहसं नवं तनौ च शोणितं नवं,
नवा वसन्त-पञ्चमी वलं नवं धिनोतु नः ॥

सरोरुहं तुषार-निर्भयं यदेति पञ्चमी,
भवत्यवेक्ष्य मित्रमागतं स्मरोऽपि पञ्चमी ।
समस्त-दुःख-दैन्य-दुर्निशा भवेच्च पञ्चमी,
चिरं जनस्य जायतां मुदे वसन्त-पञ्चमी ॥

# वसन्त-पञ्चम्यभिनन्दनम्

वसन्त-पञ्चमी सैषा पल्लवस्निग्धरागदा ।
श्लोकिता भवताद् धूतापल्लवस्निग्धरागदा ॥ १ ॥

रागदा स्याज्जगत्याः प्रकृत्या मधोर्
वीतनीहारहारिप्रहासैर् विधोः ।
स्रग्विणीयं प्रफुल्लैश्च फुल्लैर्लता
मोदमामोदरूपं व्यनक्त्यञ्जसा ॥ २ ॥

व्यनक्त्यञ्जसा चाऽऽपतन्तं वसन्तं
श्वसन्तं च हेमन्तमाश्वासयन्तम् ।
निजान्तं समीक्ष्यातिचारं स्मरन्तम्
प्रयान्तं च कृत्वा भुजङ्गप्रयातम् ॥ ३ ॥

भुजगप्रपातमपि कृत्वा प्रयातमिह शीतातिपातमवनी
स्मरति प्रकम्प-तरुझम्पाकवातनवलम्पाकपुष्पितवनी ।
चलसूररथ्यपरिपाटीदिगन्तजयधाटीकृताघशमनी
हसति प्रभातवरकुन्दावदातरदजाता वसन्तरजनी ॥ ४ ॥

वसन्तरजनी स्फुरत्तलतारनीलाम्बरा
वराभरणभूषिता नवविकस्वरैः कैरवैः ।
झणज्झणितनूपुरा पटुविसारिझिल्लीरवै-
रितेन्दुमभिकुर्वती कुतुकिनीं तु पृथ्वीं मुहुः ॥ ५ ॥

गलदरविन्दे विकचिलकुन्दे
लुलिततुषारे हिमकणहारे।
पतदलिमाले सुशिशिरकाले
विलसति धरणी कुसुमविचित्रा ॥ ६ ॥

सर्षपसुमनोवृन्दैः पीताम्वरधारिणी मही भाति।
गायति पिकी रसाले च स्वागतगीतमेषाऽऽर्या ॥ ७ ॥

## ललितो वसन्तः

पिका रसाले सुतरां लसन्तः
मुदा मनुष्या अपि चोच्छ्वसन्तः।
नृत्यन्ति गायन्ति कलं रसन्तः
"समागतोऽयं ललितो वसन्तः॥"

दूरे सदा बन्धुजनाद् वसन्तः
क्षुधादिभिर्भुक्तिविधावसन्तः।
रुजा च सर्वत्र ऋतावसन्तः
तेषां वसन्तोऽपि कुतो वसन्तः॥

कुबेरलभ्ये भवने वसन्तः
सदा प्रियोत्सङ्गमथावसन्तः।
ये चैव चिन्ताप्रचितावसन्तः
तेषां निदाघोऽपि न किं वसन्तः॥

रोगेऽपि भोगेऽपि न निःश्वसन्तः
कुटीषु प्रासादसुखं वसन्तः ।
कामाश्च येषां धियि नैव सन्तः
तेषामृतुः कः स न यो वसन्तः ॥

पुरा नृपार्हे भवने वसन्तः
निर्वाचनैर्ये समितावसन्तः ।
पुनश्च जाता विधिनैव सन्तः
नैषां कृते किं शिशिरो वसन्तः ? ॥

## अन्योक्तयः

कमलम्—

भानोरुग्रमजस्रमुस्रनिकरं संसेव्य, कण्ठं जले
चाऽऽलीयाथ मृणालकाण्डशयने स्थित्वा चिते कण्टकैः ।
लब्धाऽम्भोज ! मरन्दसम्पदतुला तेऽद्याभिनन्द्या न किं
याऽऽकण्ठं परिपीय षट्पदकुलैराशासु सञ्चार्यते ॥१॥

माकन्दः—

माकन्दो रसतुन्दिलैः परिमलोल्लासप्रकर्षाऽऽपतद्-
रोलम्बैः पटु-काकली-कल-पिकोद्गीतैः फलैः किं गुरुः ?
तत्सूती रस-पण्डितं शुककुलं घर्माभितप्तं तथा
पान्थं तर्पयति श्रिया परमया तद् गौरवं गौरवम् ॥२॥

चन्दनम्—

गन्धसार ! तव गन्ध-सम्पदो हन्त ! कोऽपि महिमा जयत्यसौ।
चन्दनं प्रकुरुषे समीपगं निम्बमप्यथ फलैर्न युज्यसे ॥३॥

शीतलः सुरभिर्बल्यश्चन्दनो जन-नन्दनः।
भुजगेन समाश्लिष्टः सगरः किन्नु जायते ? ॥४॥

निम्बः—

छाययाऽपि हरन् रोगान् पारिजातो भवन् भवान्।
रसेन कटुना निम्ब ! सर्वेषां नाऽस्ति वल्लभः ॥५॥

इक्षुः—

मधुरो रसवानिक्षुर्बलदः कुम्भिनामपि।
उप्तो मूत्रनिषिक्तायां भुवि क्षारो न किं भवेत् ? ॥६॥

वर्वूरः—

आवृतः कण्टकैस्तीक्ष्णैरल्पच्छदसमन्वितः।
उर्वरोऽपि गुणैर्हन्त ! वर्वूरो वर्बरः कृतः ॥७॥

कर्णिकारः—

कर्णिकारः सुरूपोऽसौ निर्गन्धोऽपि महागुणः।
उपरिष्टाद् गदं निघ्नन् मूलेन विषदो भवन् ॥८॥

शाल्मली—

सारहीनमपि शाल्मली-सुमं दर्शनीयमिति सेव्यते खगैः।
आकृतिर्गुणमयीतिभाषितैर्वञ्चकैः किमु न वञ्चितो जनः ?॥९॥

मेघः—

जलधर ! ते जलधारा नित्यं हरितीकृताऽखिलाशाऽपि ।
कामं शुष्यतु मयि सा व्रत-भङ्गं मा तु विस्मार्षीः ॥१०॥
मत्वा त्वामम्बुधरं जललवकणिकाशया किलाऽऽयातः ।
वर्तेऽहं नु तथा त्वयि, त्वं तु पयोद ! न मयि तथाऽसि ॥११॥

प्रभञ्जनः—

रे रे प्रभञ्जन ! विभञ्जन ! किं बलं स्वं
शैले न मूर्छयसि रूढशिलासहस्रे ।
बालामिमां नवदलामविरूढमूलां
वल्लीं विभज्य कुरुषे खल ! दर्प-शान्तिम् ॥१२॥

शाखासहस्रपरिरुद्धककुब्-विभागे
भूगर्भसंस्तृतशिफासुविरूढमूले ।
स्कन्धप्ररूढविटपे विटपिन्यहो ! किं
नोज्जृम्भसे ? नवलतासु तु जृम्भसे यत् ॥१३॥

शुष्कप्रतानविसराः प्रसरद्-भुजङ्ग-
श्वासावगीर्णगरलानलदग्धपत्राः ।
उर्वीसुदर्शधमनीततयोऽङ्घ्रिपाः किं
याताः स्मृतिं न, लतिकैव विमूलिता यत् ॥१४॥

अद्यापि नाङ्कुरशिखा प्रसृता यदीया
मूलं ततं न भुवि नो वितताः प्रतानाः ।
अन्याश्रयप्रणयिनी सततं ललन्ती
सोन्मूलिता किमपि मारुत ! बालवल्ली ॥१५॥

यैर्नर्तितं वियति, पुष्पफलप्रसूत्या
नीता जनिः फलिनतां, सुरभिर्विकीर्णः।
भुक्तं वयो, विटपिनः किमु तान् विहाय
क्षिप्ता त्वया शिशुरसौ लतिका मदान्ध ! ॥१६॥

सत्यं वदन्ति जनता जनतापकारी
शक्ताद् बिभेति निबलान् समदः क्षिणोति।
शैले यथा विहतवेग उदीर्णशृङ्गे
त्वं शैलजां नवलतामुदमूलयस्ताम् ॥१७॥

धेनुर्धिनोति पयसा जनताः, प्रसूते
वत्सान् अथ क्षितिरुहो हरतीह तापम्।
किं जातया तु लतयाऽर्जितमत्र लोके
दत्ताः शुचः किल यया विलयेन सद्यः॥१८॥

कामं लताः सुललिता इतरा अनेका
उद्भूय लोकनयनान्यभिनन्दयन्तु।
सा किन्तु हन्त ! सततं हृदये वसन्ती
शून्यं विभावयति विश्वमिदं विना स्वम् ॥१९॥

वल्लरी—

पल्लवैर्नयनोन्मादः कुसुमैर्घ्राणतर्पिणी।
क्षणेन वात्यया हन्त ! नीयते बालवल्लरी ॥२०॥

वारिधिः—

विस्तृतोऽसि समृद्धोऽसि वाऽभिजातोऽसि सागर ! ।
मूत्रितः कुम्भजेनाऽपि प्रयातः किं न वर्ज्यताम् ? ॥२१॥

वारां निधे ! नदनदीरससारपात्रं
रत्नाकरोऽजनिलयः सवितेन्दिरायाः ।
भूत्वा तिमिङ्गिलशताङ्कजलेन नित्यं
क्षारीकृतो न सुजनैः परिवर्जितोऽसि ? ॥२२॥

कुम्भात्मजेन चुलुकीकृतो यदि भवान् पुरा ।
नदीपते ! नदीनां किं नेह जाता विडम्बना ? ॥२३॥

**शिवः—**

एकदाऽनृतगिरैव केतकी सर्वथा किमिव शर्व ! वर्जिता ? ।
आनिशं तु परिचालयन्ति ये घण्टिकां किमु त्रिशङ्कुनन्दनाः ? ॥२४॥

**धेनुः—**

धेनो ! धिनोषि न पयोवपुषाऽमृतेन
ग्रस्तं रुजा च जरसा च बलक्षयेण ।
नो तर्णकांश्च सबलान् सुयमान् प्रसूषे
कस्त्वां धिनोतु वद केवलधर्मबुद्ध्या ॥२५॥

गौर्गौरिति कथं दैन्यपात्रतां यासि सुव्रते ! ।
ऊधसा क्षीरदा कामं शृङ्गाभ्यां भयदा भव ॥

गवि गोत्वं वृषे गोत्वं जातिः सैवोभयोः स्थिता ।
एका व्यनक्ति दीनत्वं परश्चाधृष्यतां निजाम् ॥२६॥

**मातङ्गः—**

अश्नन् घृतार्द्रगुडपिष्टमयं सुपिण्डं
शीतातपक्षयसुखे भवने स्थितोऽपि ।
नागाधिपः स्मरति किं नहि विश्रमेषु
स्वेच्छाविहारकृतमात्मसुखं वनेषु ॥ २७ ॥

मातङ्ग ! भीमकायोऽसि काये धारयसे वलम् ।
नासां वहसि दीर्घां रे न तु दृष्टिं प्रथीयसीम् ॥२८॥

गजराज ! वलोन्मत्तो लोकं भीषयसे वृथा ।
परभारवहो भूत्वा दन्तौ दर्शयसे न किम् ? ॥२९॥

इयं पिपीलिकामध्या वामनं कुरुते गजम् ।
पृष्ठदेशं समारुह्य मनुजानां तु का कथा ? ॥३०॥

किं वल्गसि बलिष्ठं त्वमात्मानं दर्शयन् द्विप ! ।
पिपीलिकाऽपि हन्यात् त्वां वनराजस्य का कथा ?॥३१॥

**सिंहः—**

आत्माहतद्विपपलाशनवृत्तिवित्तः
सिंहः स्व-पौरुषभुजां सुनिदर्शनं यः ।
व्यायामजीवि-वशगो बत ! सोऽपि दैवाद्
भुङ्क्ते यथार्पितमितं सहते च दण्डम् ॥३२॥

एकोऽसि दन्तनखपुच्छमहायुधोऽसि
प्रेष्ठे करोषि गहने विपिनेऽधिवासम् ।
नादस्त्वसौ दिग्भिदर्पविभङ्गभीमो
नित्यं तनोति भुवनेषु तव प्रतापम् ॥३३॥

न दण्डशक्तिशक्तिमान् न कोशपोषलोलुपो
न मन्त्रिमन्त्रनिर्णयः पुरोधसो न चाश्रितः ।
मृगेन्द्र ! ते मृगेन्द्रता प्रतापतापिनी परं
त्वदीय-प्राभवं न यत् क्वचित् परैर्विहन्यते ॥३४॥

वृषः—

न दम्योऽसि न धुर्योऽसि भुङ्क्षे दण्डानथापणे ।
परक्षेत्राणि सन्दूष्य किं रे वृष ! विनर्दसि ? ॥३५॥

बकः—

शुक्लोऽसि निःस्वोऽस्यपरिग्रहोऽसि
पादेन कामं तप आस्थितोऽसि ।
बक ! त्वदाचारममुं समीक्ष्य
सन्तोऽपि जाता बकबुद्धिपात्रम् ॥३६॥

खरः—

परेषां भारवाहोऽपि शुष्कदूर्वाशनोऽपि सन् ।
किमर्जयसि वालेय ! चीत्करोषि मदेन यत् ॥३७॥

कृतघ्नः—

पायंपायमजस्रमौस्रियपयस्तुल्यं सदोर्जस्करं
यस्याः स्तन्यरसामृतं तव तनूराप्यायिता सर्वतः ।
तां वात्सल्यमयीं विहाय जननीमन्यां श्रयन् मातरं
त्वत्तः को नु कृतघ्न ! निर्घृणतरो भूमाविहान्यः पुमान् ॥३८॥

प्रभुः—

प्राभवं न परोक्षेऽपि यस्य प्रतिहतं भवेत् ।
प्रभुः स एव, को न स्यात् संज्ञामात्रेण तु प्रभुः ? ॥३९॥

राज्यम्—

राज्यं तदेव यदि तत्र जना विचिन्ताः
स्वस्थाश्चरन्ति सुखिनोऽप्यकुतोभयाश्च ।
तत्राऽपि चेदसुभयं न हृदोऽपयाति
स्यादन्तरं किमिव भो विपिने पुरे वा ॥४०॥

श्वा—

एकदा पिण्डदस्याऽपि पुच्छं लोलयसे पुरः ।
बान्धवं तु निजं दृष्ट्वा श्वन् ! कथं घुर्घुरायसे ? ॥४१॥

त्वं पिण्डदस्य सततं हितचिन्तकोऽपि
किं सारमेय ! विहितोऽसि जनेन निन्द्यः ? ।
आजीवनं समुपजीव्य निजाश्रयाय
द्रुह्यन्ति ये किमिव ते भुवि माननीयाः ? ॥४२॥

किं ग्रामसिंह इति नामनि निन्द्यता श्वन्
ग्रामं रिरक्षसि यतो निजबुक्कनेन ।
श्रुत्वा तु बान्धव-रवं शयितस्य रात्रौ
कर्णंज्वरं प्रकुरुषे, तत एव निन्द्यः ॥४३॥

अपरिग्रहोऽसि दन्ताऽऽ—
युधस्तथा स्वामिनश्च भक्तोऽसि ।
किं कुर्कुरायमाणः
पदयोः पिण्डार्थमयि लुठसि ? ॥४४॥

गर्हितं श्वानमाखेटे मुखे पूतं वदन्ति ये।
जरत्या श्रङ्गमात्रे तान् सतृष्णान् पण्डितान् नुमः ॥४५॥

भवन् पुष्टो देहे श्ववृषभ इति ख्यातिमहितो
विधुन्वन् लाङ्गूलं चरसि वरयानेषु धनिनाम्।
अपि भ्रामन् रामाजघनतलमुद्दाममदनो
रुचिं शुष्कादस्थ्नो न कथमपनेतुं प्रभवसि ? ॥४६॥

मानवसङ्गात् कामं स्नासि च भुङ्क्षे च पिष्टकं सपयः।
अस्थनि पूतिनि सक्ति कौलेयक! किं निजां त्यजसि ?॥४७॥

पुराणैः कुत्सितो नित्यं येषां त्वं सम्मतोऽधुना।
सारमेय ! कृतज्ञः सन् स्तुतिं तेषां समाचर ॥४८॥

पुच्छं धुन्वन् लुठन् पादे भक्तिं दर्शयसे पराम्।
अलर्कं तु तनौ मुञ्चन् श्वन्! त्वं नूनं यमायसे ॥४९॥

किं कुक्कुर! परान् दृष्ट्वा पुच्छमुद्धूय बुक्कसि।
आत्मनो विवृतं गुह्यं मूढ ! संवृणुषे न किम् ? ॥५०॥

षडाननः—

भोः षडानन प्रत्येति देवसेना कथं त्वयि ?।
द्विमुखे न हि विस्रम्भो लोकस्य त्वं तु षण्मुखः ॥५१॥

गृह-शान्तिः—

वाहनं वृषभः पत्युर्भार्या स्यात् सिंहवाहिनी।
आखुवाहः सुतो यत्र शान्तिस्तत्रेति विस्मयः ॥५२॥

**नारी-रूपम्—**

गौरी, वामा, सती, चण्डी, दुर्गा, लक्ष्मीः, सरस्वती।
नारी शूर्पणखी काचिन्मन्थरा वाऽपि ताडका ॥५३॥

**पारवश्यम्—**

पारवश्ये मृगेन्द्रोऽपि जनैः किं नोपहस्यते ?।
प्रदर्शनकृतां वृत्तिं भुङ्क्ते दण्डसहो भवन् ॥५४॥

**ताम्रचूडः—**

ताम्रशिख ! किं रारटीषि दिवानिशम्
किं नु बधिरं मन्यसे सर्वं जगत् ?।
शिक्षयसि किं वा स्वरारोहं जनान्
सूचयसि वा कालगतिमुच्चैः स्वनन् ? ॥५५॥

शिक्षते कोऽद्य स्वरारोहं क्षितौ ?
कालगतिरपि बद्ध्यते पाणौ जनैः।
त्वं बलात्कुरुषे परं प्रमदास्तु यत्
उच्छिखस्तद् भोज्यतां यातोऽसि भोः ? ॥५६॥

**अजः—**

ममकारं रटसि सदा किमज ? विनाशं निजं तु मन्त्रयसे ?।
यावज्जीवं ममकं मृतस्तु तुङ्कारमातनुषे ॥५७॥
ममकारस्तव वदने तदपि गतोऽसि वध्यतां त्वमज !।
येषां पञ्चमकारस्तेभ्यः कुरु भो नमस्कारम् ॥५८॥

खञ्जरीटः—

खञ्जरीट ! चलत्वेन याभ्यां त्वं तुलितो भुवि ।
बाणोपमाभ्यां नेत्राभ्यां ताभ्यां किं न हतः स्वयम् ॥५९॥

वानरः—

वालध्याकारचलनैर्वानर ! त्वं चतुष्पदः ।
अनुकर्तृतया नृणां सत्यमेवाऽसि पूर्वजः ॥६०॥

प्रकाशरति - गोप्याङ्गदर्शनादिप्रवृत्तिभिः ।
नराः पूर्वज-वृत्तं चेद् रक्षन्त्यत्र न विस्मयः ॥६१॥

हनूमद्-व्यपदेशेन न पूज्यो जायसे कपे ! ।
एकः कुले गरीयाँश्चेन्न सर्वे गुरवस्तदा ॥६२॥

कोकिलः—

कृष्णोऽपि कोकिल ! त्वं मधुभाषीति प्रशस्यसे जगति ।
न बकः काय-वलक्षः कस्यापि श्लाघनीयोऽत्र ॥६३॥

काकस्य कोकिलस्य च मलिनात्मत्वं समं निसर्गकृतम् ।
एको यद् बलिपुष्टः परश्च परपिण्डसम्पुष्टः ॥६४॥

परभृत ! कृष्णो न त्वं भवसि वपुष्येव मानसेऽपि तथा ।
निज-पोषकमपि हि कुलं स्वार्थपरो यत्प्रतारयसि ॥६५॥

सर्पः—

आश्यां विषं मलिनतात्मनि वदने फूत्कृतं द्विजिह्वत्वम् ।
अन्यत् किं विषमतरं भुजगीनामपत्यभोक्तॄणाम् ॥६६॥

पुच्छेनाऽपि मुखेनाऽपि प्राणिनां प्राणहारकः ।
दन्दशूक ! तथापि त्वं चिरायुर्विधिना कृतः ॥६७॥

मत्कुणः—

पायंपायं परासृग्भिर्ज विनाऽस्थि वपुराश्रयन् ।
मत्कुण ! स्थूलतां यातो मुखेनाग्नि विमुञ्चसि ॥६८॥

रक्तबीजकुलोद्भूत ! पररक्त - विपोषित ! ।
ददासि वदनेनाग्नि निद्रां हरसि किन्त्वहो ॥६९॥

छिद्रान्वेषी खराद् भीतः शीतले विक्रमं भजन् ।
दृष्ट्वा पलायते सद्यः कदर्यः खलु मत्कुणः ॥७०॥

## छेकापह्नुति-विंशतिः

परामृशति मस्तके, श्रुति-पथे कलं गायति,
प्रहारमुपमन्त्रयत्यथ मुहुः स्पृशन्ती तनौ ।
विचुम्बति रदच्छदं, पुनरुपेत्य भावातुरा,
समाचरति निर्वृतिं, किमु प्रिया ? न भो ! मत्सरी ॥

कदाचिदवतिष्ठते, निभृतमन्तिके चागता,
तनोति किलकिञ्चितं, श्रुतिपुटे कलं कूजति ।
अपैति करताडिता प्रकुपितेव चैवान्यतः,
करोति बहु कौतुकं, किमु प्रिया ? न भो, मत्सरी ॥

स्थिताऽपि पुरतो न साऽऽलपति वीक्ष्य चान्यं जनं
मिषेण तु गतागतं प्रकुरुते मुहुः संभ्रमम् ।
रहस्यथ भृशं दशत्यपि च भर्त्संयत्युच्चकैः
प्रिया किमु पराङ्गना ? मशक-गेहिनी सा सखे ॥

कदाचिदुपमन्त्रयत्युपगताऽन्तिके श्रोत्रयो-
रुपैति पुनरन्यदोच्छ्रितभुजा समालिङ्गितुम् ।
करोति पुरुषायितं प्रसभमास्थिता विग्रहे
प्रिया नु धुवनोत्सुका ? चपल ! सैव रे मत्सरी ! ॥

तनौ सुमसृणान्तराऽसृगशनेन सम्पोषिता
गतौ सुचपला गृहस्थितिरसा रहोरागिणी ।
तमोनिवसना प्रकाश-धुवनाऽनलोद्गारिणी
प्रचण्डरतिरङ्गना ? मशकवल्लभा साऽस्ति भोः ! ॥

अपैति परिसर्पति स्पृशति वक्ति किञ्चिच्छनैः
परैति पुनरन्यतः प्रकुपितेव वा बिभ्यती ।
समेति पुनरुत्सुकेव सहसा तनुं क्लामति
ध्रुवं मदन-विह्वला ? मशक-कामिनी मित्र ! सा ॥

बिभेति शिशिरादियं स्पृशति चार्द्रभूमिं सदा
तपे प्रबल-विक्रमा न कुरुते गतं चाऽऽतपे ।
पराऽसृजि तृषाऽऽतुरा सित-तनुर्महामायिनी
नु काऽपि कुणपाऽशना ? मशकवल्लभा भद्र ! सा ॥

दिवा भवति दूरतो नयन-गोचरेऽप्यागता
ह्रियेव तु विलोकयत्यपर-पृष्ठभागे स्थिता।
निशि प्रसभमेत्यहो मशक-वारिणीमुत्सुका
विशत्यपि, नु का प्रिया ? मशक-कामिनी मित्र ! सा ॥

महासित-कलेवरा वियति गामिनी पक्षिणी
विनाऽस्थि तनुधारिणी, सुचपलाऽनलोद्गारिणी।
पदस्पृगसृजि स्पृहां प्रकुरुते कलं गायति—
श्रुतौ, न खलु यक्षिणी ? मशक-वल्लभा सा सखे ! ॥

उपेत्य चरणौ स्पृशत्यथ निधाय वक्त्रं श्रुता-
वनामयमनाकुलं मधुरभाषिणी पृच्छति।
रसादथ परामृशत्यधरदंशमुष्णं मुहुः
स्थिता वपुषि साऽऽग्रहं, ननु प्रिया ? न भो मत्सरी ॥

दरस्मितसमुल्लसद्वदनचुम्बितोत्तंसितैः
प्रजागर-महोत्सवैरनिशमूर्जयन्तीव माम्।
सदा मधुरगायना श्रुति-चमत्कृतिं तन्वती
तनोतु मम शं, नु का ? कुटिल ! मत्सरस्याऽऽङ्गना ॥

दृशावसितशोभने च सरसे च, दीर्घं श्रवः
तनुः सुमसृणाऽऽचिता धवलदन्तभूषं मुखम्।
गतं वरटया समं, ध्रुवति वेणिकां भूयसा;
प्रगायति मदोत्कटा, किमु प्रिया ? न भो रासभी ॥

समुच्चलति दूरतोऽपि मयि दृक्पथीने स्वयं
विहाय निजमासनं भवति चाऽऽतुराऽऽलिङ्गितुम्।
तनोति गुरु सम्भ्रमं वदनमुच्चकैस्तन्वती
व्यनक्ति निजमाशयं, किमयि कामुकी ? नो, शुनी ॥

अपैति प्रतिषेधिता, पुनरुपेत्य भीता द्रुतं
बलादपि गले लगत्यथ मुखं मुहुश्चुम्बति।
निषीदति च भोजने मलिनपाणिपादाऽप्यहो !
न किं भवति कन्यका ? न खलु, मक्षिका वर्ण्यते ॥

गृहं प्रकुरुते चला सकलमाकुलं चङ्क्रमैः
न चिन्तयति वर्जितं, पतति सर्वतश्छन्दतः।
समीक्ष्य मधुरं किमप्यथ समेति दूरादपि
क्षणेन परिधाविता, न किमु कन्यका ? मक्षिका ॥

पिबत्यनुदिनं परासृगथ नैति तृप्तिं क्वचित्
क्षणे कटु मधु क्षणे वमति जिह्म-वृत्तिः सदा।
परामृशति पादयोर्दशति मर्म पृष्ठे स्थितः
स्तुतोऽयि मशको नु किं ? न खलु, शोषवृत्तिर्जनः ॥

रक्तं हरत्यहरहः कणशो जनानां
नेत्रे विघूर्णयति, मुञ्चति नैव मुष्टिम्।
दम्भी, च्छली प्रशममेति खरे परस्मिन्
किं मत्कुणो ? नहि सखे ! परकर्मजीवी ॥

वाचं न मिश्रयति मद्-वचसा सरागं
कर्णे करोति कथितं हसिते न योगम् ।
चित्तं विरञ्जयति मे नितरां सरागं
किं प्रेयसी ? न हि सखे ! भवतोऽभिमानः ॥

शीर्षं विधूनयति वीक्ष्य पुरः स्थितं मां
लत्तामुदञ्चयति च स्तनगामिपाणौ ।
सम्बोधिता प्रतिवचो न ददाति जातु
किं मानिनी ? नहि सखे ! महिषी मदीया ॥

आयाता सा निभृतचरणा शून्यकक्षे मदीये
रात्रौ, दृष्ट्वा चकित-चकिता मां स्थितां कोणभागे ।
आहूता तु प्रतिपदमये ! गन्तुमेव प्रवृत्ता
किं स्विद् रामा प्रणय-कुपिता ? नो, मदीया बिडाली ॥

## हन्त ! गतो जवाहरः

भरतावनिभाविभाकरो युव-चेतःसु सदा जवाहरः।
परलोकमितो गतो हहा ! जननेता सहसा जवाहरः॥

कमलामयि संस्मरन् नु किं चिरयातामनुयातुमुद्यतः।
ननु तत्प्रतिमूर्तिरिन्दिरा तनया हा ! वद विस्मृता कथम् ?॥

धरणी भरणीयतामगात् तव निर्व्याजसुभक्तिसेविनः।
कथमद्य विहाय याऽसि तां सित-कीर्ते ! प्रबलेषु शत्रुषु ?॥

अयि कर्मठ ! विश्रमो न ते पुरुषार्थैकरतेररोचत।
युगपत्किमु विस्मृतं व्रतं करणीयं यदुपेक्षसे गुरु ?॥

निज-देश-समृद्धि-वृद्धये यतमानो मतिमन् दिवानिशम्।
सहसाऽर्धपथे विहाय हा क्व गतो लोक-मनोरथैः सह ?॥

त्वयि मानवता दिवङ्गते तव वक्षोग्रहणेन लालितम्।
नयने कुरुतेऽनुरागिणी स्मरणीयं बहुशोभि पाटलम्॥

त्वयि विश्वविभूतितां गते वसुधा नेहरुवंशवर्द्धने।
मुहुरुच्छ्वसिति स्म या मुदा विधिना किं नहि वञ्चितेव सा ?॥

जनकेऽस्तमिते सुनिर्वृतिं त्वयि वात्सल्य-निधावुपेयिवत्।
कुत एतु मुदं वताधुना तव दौहित्रयुगं सुवा समम् ?॥

अयि भारत ! लुण्ट्यसे हहा ! विधिना मानवते ! प्रवञ्च्यसे ।
भुवि शान्तिकथा विलीयते, स्मृतिमात्रे ननु शील-पञ्चकम् ॥

जनको जननी स्वसा त्वया दयिता चापि सुताऽमितं वसु ।
जनिभूमिकृतेऽखिलं हुतं तनुरप्यद्य समर्पिता पुनः ॥

व्रज वीर ! जवाहरामराऽऽलयमुर्वीं प्रविहाय दुर्भगाम् ।
शृणुया अवदान-गीतिका जनगीतास्त्रिदशेषु संस्थितः ॥

न तु विस्मरणीयमेव ते जगदेतद् रणभीतिविस्मितम् ।
अनुभाववशोऽपि भूयसे प्रयतेथा भविकाय संततम् ॥

## बत लालबहादुरो गतः

जन-मानस-वास-लालितेऽपहृते हा सहसा जवाहरे ।
खल ! काल ! कराल ! यत्र नः फलिताऽऽशा किमसौ त्वया हृतः ?

प्रभवः कुटिलाः कदर्थिनो जन-सेवाच्छल-सर्व-घस्मराः ।
शुचिरेक उदार-दर्शनो, नहि सोढस् तव मत्सरेण सः ॥

अवनीयतमा प्रसाविनी भवतोऽभूदयि ! भारताऽवनी ।
दयनीयतमा तु सा कृता नयनाऽम्बु-स्रवणैरपावनी ॥

त्वयि लालबहादुरेऽदरे गतवत्याशु सुरेन्द्र-मन्दिरम् ।
घन-गर्जन-तर्जनोन्मदाः कृत-हुङ्कार-रवाश् च फेरवाः ॥

अयि शान्ति-समीह ! शान्तये तनुमप्यर्पयता यता दिवम् ।
भुवने भवनेऽपि शंयुना भविता शं नु कथं त्वया विना ? ॥

नय-पण्डित ! मण्डिता त्वया शम-वार्ताऽथ तयाऽतुलं यशः ।
रण-चण्ड-धियां तु खण्डिता न रणेच्छा कथमद्य गम्यते ? ॥

हत-कण्टक ! कण्टकाऽऽचिते पथि नित्यं चलितं प्रियं [तव ।
अधिशेतुमितीहसे कथं वद शय्यामयि ! गन्धसारजाम् ? ॥

बहुशो निकषोपलायितैः परितप्तोऽसि विपत्-कृशानुभिः ।
अयमद्य तु चन्दनाऽनलो दहति त्वामिति को विपर्ययः ? ॥

विवरीतुमुताऽसि सत्वरः शम-वार्ता-फलितं जवाहरे ।
यदपास्य समस्त-बान्धवान् धरणीं च त्रिदिवं त्वमास्थितः ॥

रिपवोऽरिपवो घनाऽश्रवस् त्वयि जाते वसुधाऽपरागिणि ।
जनता जन-तापनुत् ! त्वया व्यथिता चेत् क इवाऽत्र विस्मयः ? ॥

जननी जननी सुवत्सला ललिता सा ललिता प्रिया सती ।
तनया विनयाऽऽलया हहा सकला एकपदे किमुज्झिताः ? ॥

प्रवया जनकोऽप्रसादितो भगिनी चाऽभिधयैव सुन्दरी ।
ललिताऽललिता कृता जनी जननी चाऽश्रुकला बताऽजनि ॥

हरिकृष्ण ! हृता मुदोऽद्य ते गत-श्रीलोऽसि सुनील ! हा कृतः ।
अनिलोऽननिलः किलाऽऽकुलोऽयमशोकोऽपि सशोकतां गतः ॥

व्रज लाल ! सुरेन्द्र-लालितां दिवमुल्लासय देव-मण्डलीम् ।
धरणीं तु ततोऽपि लालयेरनुभावैरयि भारतीं सदा ॥

# संस्कृत-त्रिपदिकाः

## ( रुबाइयां )

तरुणः किं यदि तारुण्य-कृतो नैव मदः ?
गुरुता का यदि नो याति हृदो गर्व-गदः ? ।
श्वसितं नैव परं जीवितमस्मिन् लोके
कुसुमं किं यदि नो मादयते चित्तमदः ॥ १ ॥

सरलः प्रेम-पथस्तत्र तु यानं न सुखम्
मधुरं प्रीति-फलं तस्य विधानं न सुखम् ।
लतिका पाटलिता कण्टक-कूटे वृन्ते
मधु पूर्णं कुसुमे, तस्य तु पानं न सुखम् ॥ २ ॥

अनुष्णे शोणिते किं जीविते कर्तुं क्षमो लोकः
विलीने साहसे किं जीविते कर्तुं क्षमो लोकः ।
निकारे जायमाने नो यदि ज्वलितं रुषा चित्तम्
बलं कामं तनौ, किं जीविते कर्तुं क्षमो लोकः ॥ ३ ॥

कुसुमं किं यदि रूपं न, न वा गन्धबलम्
न रसेनाथ तृषं हन्ति, कथं तन्नु जलम् ।
सरसं नैव मनो नापि विलीनो भेदः
शुचिता चेन्न गता, किं नु ततः प्रीति-फलम् ॥ ४ ॥

शशी किं वारिधिं ब्रूते सखे मामभ्युपेहीति ?
शिखा दीपस्य किं ब्रूते पतङ्गं मामुपेहीति ? ।
वलीयान् प्रीति-वेगः कर्षति स्वान्तं सुदूरेऽपि
सुरूपं किं दृशं ब्रूते कदाचिन्मामुपेहीति ॥ ५ ॥

रज्यते चित्तमिदं रञ्जयितुं नो शक्यम्
भवति प्रेम शुभं भावयितुं नो शक्यम् ।
सहजो यो न गुणस्तत्र न यत्नो घटते
यदि शीतं रुधिरं घर्मयितुं नो शक्यम् ॥ ६ ॥

किमर्थं सौरभं न प्रीणनं चेद् घ्रातुकामानाम्
मधूद्वेलं वृथा नो तर्पणं चेत् पातुकामानाम् ।
गुणानां गुण्यते गुणतेह भोगैर्नैव दुर्योगैः
मुधा तद् यौवनं भोगाय नो चेद् भोक्तुकामानाम् ॥ ७ ॥

अलीकं तन्न यन्निह्नूयते लोकैर्नवालीकैः
अनीकं तन् न यद् वा शक्यते जेतुं शताऽनीकैः ।
परं किं दर्पणोऽसौ यत्र विम्बं नैव सङ्क्रामेत्
मनस्तत् कीदृशं यद् विध्यते नो नेत्र-नालीकैः ॥ ८ ॥

रवेः सन्तापशीलो वाष्पवर्षी चन्द्रमा नित्यम्
ज्वलन्निःश्वासधूम्रं धूमकेतोराननं नित्यम् ।
व्यथाभिर्दह्यमानः किं न दन्दह्येत भो लोकः
न किं निर्दह्यते जलराशिरन्तर्वह्निना नित्यम् ? ॥ ९ ॥

पुरःस्थे माधवे वैशाखनन्दन, किं न ते हर्षः ?
निदाघे चागतप्रायेऽर्के किं नासौ तवोत्कर्षः।
किमद्यां मानवैर्लाभार्थिभिदूर्वाऽपि विक्रीता
स्मये नो निर्घृणानां वो दले जायेत मे तर्षः॥ १० ॥

प्रीतयः सन्ति नवा रीतयः सन्ति नवाः
प्रियमनुकूलयितुं नीतयः सन्ति नवाः।
नूतने तूद्भवति प्रेमणि चित्ते यद् यत्
तत् परान् भावयितुं रीतयः सन्ति न वा॥ ११ ॥

जीवनं न ध्रुवमिह यौवनं न ध्रुवमिह
मन्यते प्रेम ध्रुवं सर्वमिदं न ध्रुवमिह।
प्राक् तु यत् सङ्गसुखात् प्रीतिघनत्वं दृष्टं
सङ्गमान्तेऽपि नु तत् कस्यचिदस्ति ध्रुवमिह ?॥ १२ ॥

## स्वतन्त्रता-दिवसः

नभो घनध्वान्तमलीमसं सत्
सितं सितांशुस्मितरेखयाऽथ ।
दास्यक्लमे पञ्चदशेऽवहीने-
ऽन्वर्थी न किं प्रापदगस्त्यसंज्ञाम्? ॥

चिरावनद्धा घनशृङ्खलास्ता
दास्यस्य देशस्य निकारमूलम् ।
छिन्नाः किलाऽस्मिन् दिवसे जनानां
ग्लान्या सहैवेति न सोऽभिनन्द्यः? ॥

वयं स्वतन्त्रा अधुना स्व-भाग्य-
कर्तार इत्युद्गत-मान-भावाः ।
उन्नीय नानाविध-कर्म-योगैः
स्वं भारतं भारतमाचराम ॥

सङ्कल्पमित्थं शिवमाशु कृत्वा
ये येतिरे मातृभुवो हिताय ।
निरस्य तान् स्वार्थधियोऽद्य हन्त !
स्व-वर्ग-वृद्ध्यै कलिमाचरन्ति ॥

स्थितः फणी शीर्ष्णि पुरापि येन
दष्टा वयं दुर्मनसा सदैव ।
विस्मृत्य तं त्वद्य मिथो रुजन्तो
वैदेशिकान् किं नहि हासयामः? ॥

अद्यापि कालः प्रतिवुद्धचित्ताः
संहृत्य शक्त्यर्थंमहीनयत्नाः।
सञ्चयञ्च इद्धौजस उन्नमन्तो
रिपुं प्रतीपं सहसाऽचराम ॥

यावद् बुभुक्षा स्वहितैकबुद्धिः
कलिर्मिथो द्वैतरतिर्वितण्डा।
नैष्कर्म्यमालस्यमनेतृनैघ्न्यं
देशे, न तावत् क्रियतां शुभाशा ॥

स्वतन्त्रतेयं चिरकाललब्धा
क्रीता निजप्राण-धनार्पणेन।
दत्त्वा पुनर्जीवनमद्य रक्ष्या
शक्ष्याम एवात्र धृतव्रताश्चेत् ॥

गर्वोऽनुभाव्यो जनुषेऽत्र देशे
सर्वं प्रियं स्यादथ चैतदीयम्।
उत्कोचलोभः परिवर्जनीयः
कर्तव्य-निष्ठा च सदाऽवधेया ॥

स्याद् देश-भक्तिः प्रभुभक्तितुल्या
लोभं विहायास्तु तथार्थ-शौचम्।
संहृत्य सर्वे खलु भारतीया
दोषापहाराय सदा यतेरन् ॥

सत्य-प्रतिष्ठा अथ कर्मनिष्ठाः स्व-गीरताः संस्कृति-भक्तिसक्ताः।
ऐक्यव्रताः स्युर्यदि भारतीयाः स्वतन्त्रता शैलशिलाचला स्यात् ॥

## कविकुलगुरुप्रशस्तिः

शृणुत शृणुत सभ्या ! वर्ण्यते काऽपि भव्या
प्रगुण-रस-रसाला जाति-वृत्तोरुशाला ।
रमित-रसिक-चित्ताऽलङ्कृतिख्यातिवित्ता
न हि खलु तरुणी सा, कालिदासस्य वाणी ॥

साध्नोति याऽर्थमिह वाचि रसं तथार्थे
ब्रह्माऽपि शब्दतनु तत्त्रितयाविभिन्नम् ।
सा कालिदासकविता दयितेव भव्या
नव्या चिराय जयताज्जगतीत्रयेऽपि ॥

हिन्दूसमाजवरजीवितहेतुभूतां
वर्णाश्रमस्थितिमुदारपदप्रबन्धैः ।
वैदर्भवाचि रघुवंशमिषेण गायन्
श्रीकालिदासकविरार्यकुलप्रतिष्ठा ॥

शाकुन्तले जगति ते कविता-विधातः !
शातोदरी - प्रणयभूतलसम्प्रतिष्ठा ।
भावातिरेकविहिता नवनाकसृष्टिः
सत्यं प्रजापति-पदं सुकवेर्विधत्ते ॥

सन्देष्टुमर्हतु न वा ननु मेघदूतो
यक्षोदितं दिशि धनाधिपपालितायाम् ।
सन्दिष्टमस्य तु दिशज्जगते समस्मै
दौत्यं यथार्थमिदमञ्चतु मेघदूतम् ।

शान्ता प्रसाद-सुमुखी रति-लालनीया
भावाभिलोभिनरता सुरतोत्सुका च ।
श्लक्ष्णा मनःक्षणकराधिगुणैश्च मन्दा-
क्रान्ताञ्चितस्थिरपदध्वनिलोभनीया ॥

सूर्ति समाचरति मानसजन्मनो या
भावामृतैः शिवविलोचनलोपितस्य ।
आस्वादिताऽपि सततं रसिकैस्तदीयं
रागं समर्धयति नित्यनवस्वरूपा ॥

सल्लक्षणा मधुरकान्तिविलक्षणा च
श्लेष-प्रभाव-विकला सकला-कलापा ।
सा कालिदास-कविता वनितेव भव्या
चेतो न रञ्जयतु कस्य मनोऽभिरामा ? ॥

सुरभारति ! भारत-भारति ! ते
रुचिरा रुचिरारचि येन पुरा ।
रसिकारसिकारसिकाव्यकृता
क्व नु देवि गतः स कविः सुकविः ? ॥

रसा-रसाल-साहिती-निपान-पोन-कौतुकै-
स्त्वदीय-काव्यसू-धुनौ विधाय गाढ-मज्जनम् ।
समीक्ष्य सत्यसुन्दरं शिवं विधूतकल्मषैः
कवीन्द्र ! कालिदास ! देह-बन्धनं विधूयते ॥

# संस्कृत-दिवसः

नव-रस-पूरैः सततं तापधुताखिलमनःशुचां शमनी ।
प्रावृडिवेयं वाणी गैर्वाणी भवतु सुमुदे वः ॥

मलिना आशाः कामं घनाघनानां घटाभिराच्छन्ना ।
दीपं दर्शयतीयं चामीकर-हासिनी विद्युत् ॥

लोको जुगुप्सितानप्यामन्त्रयते महालये काकान् ।
चित्रं तथा न, वर्षे क्रियते संस्कृत-समारोहः ॥

संस्कृत-दिवसः किं भोः संस्कृत-संस्थान-दिवस एवाथ ।
प्रतिवर्षं सम्भूतैः संस्कृतमागीयते यत्र ॥

देवानां गीः संस्कृतमिति किं मर्त्यैः क्रियेत तत्पठनम् ।
ध्रुवमिति मत्वाऽपि जनो धीमान् नैतत् तदाद्रियते ॥

संस्कृत-संस्कृति-योगः संस्कारार्थं नरस्य यत्राऽऽसीत् ।
यातास्ते खलु दिवसा अद्य न तेषां क्वचिन्मूल्यम् ॥

संस्कृत-सेवा-हेवाका ये लोका न किं नु मूढधियः ।
जाता असंस्कृतास्ते परे तु तत्स्थान-संभाजः ॥

संस्कारं नाद्रियते यास्कोऽपि सदार्थनित्यतावादी ।
तत् कथमनर्थ-नित्यैः संस्कृत आधीयते यत्नः ? ॥

संस्कृतदिवसस्तस्मात् कथमिव न परम्परैकनिर्वहणम् ।
परमार्थतो न किञ्चित् क्रियते चेत्तद्-विकासाय ॥

दिवसेऽस्मिन् समवेताः सर्वेऽपि जनाः प्रणं ततः कुर्युः ।
आजीवनमपि न वयं देवगिरं विस्मरिष्यामः ॥

घनाक्षरी छन्दः—

## लाजपतराय जय हे !

'राधाकृष्ण'-वंश-हंस ! 'ढोडके'-मही-वतंस !
पञ्चसिन्धु-मानस-सरोज-कुशेशय हे !
वाणी-बल-सञ्चित-विभूति-चय ! जन-हिताय
संस्थापित-नैक-नव-शारदा-निलय हे !
एधमान-कलुष-विदेश-जन-संस्कृति-
प्रभाव-हरणाय नित्य-यापित-समय हे !
भारत-स्वतन्त्रता-महाऽट्ट-मूल-शिलान्यास-
बलि-लाजपत लाजपतराय ! जय हे ! ॥१॥

भारत-महीयमतिमहिम-महीयसीति
देशभक्तिभाग्यधरैस् तारमभिधीयते !
दुर्मद-गोरण्ड-वृन्द-भूरि-भार-दुर्भराऽपि
भारतीय-भरैर् हन्त ! निर्भरा विधीयते ।
लाजा इव पतताऽयि ! रायो जुहुतेह, किं न !
जीवनस्य निष्क्रयेण दास्यमपनीयते !'
स्वाधीनता-युद्ध-महायज्ञ-मुखे लाजपत !
त्वया निज-संज्ञयेति जनता विनीयते ॥२॥

विकट-भुशुण्डिकोरुदण्ड-चण्ड-दुर्गुरुण्ड-
यूथैः सह संस्थितः स सौण्डस-महाकरी ।
प्रतिपदमथ भारतीय-रक्षा-पुरुषीय-
चमूरपि तिष्ठतीह लगुड-कृपाकरी ।

चटुल-विलोचनेति 'दयित ! विलोकये'ति
वदति विमान-गतं प्राणपतिं खेचरी।
'साइमनाऽऽयोग-गज-यूथ-विनिवारणाय
विक्रमते हन्त ! पञ्चनद-नर-केसरी' ॥२॥

एकतो भुशुण्डि-दण्ड-चण्ड-दुर्गुरुण्ड-चमूर्
अन्यतो निरस्त्र-शान्त-राष्ट्र-केतु-वाहिनी।
इतो 'हॉल्ट हॉल्ट' रवः 'साइमन, याहि' ततो
यष्टिका-प्रहार इतस् ततः पुरोगाहिनी॥

पञ्चनद-केसरी जगर्ज शृणु सौण्डरस !
न हि दण्ड-पात एष मयि देह-दाह-नीः।
मह्यमयं कौसुमः प्रहार आंग्ल-राज्य-कृते
भविताऽरे प्रेत-पट-पुट-कील-गाहनी ॥४॥

भीम-भूमि-कम्पितेषु काल-जाल-चम्पिते-
ष्वकाल-बल-झम्पितेषु लोक-सेवनेऽग्रणीः।
जाल्म-जन-जल्पितेषु कोटि-कूट-कल्पितेषु
वादि-वाद-गल्भितेषु वाग्भटेष्वनादरी॥

सङ्कटेषु विव्यथे न, वेपथौ च पप्रथे न,
सिष्विदे धनोष्मणा न सत्यपालनाऽऽदरी।
मातृ-भूमि-सेवनाय, हिन्दु-स्वत्व-रक्षणाय
संचिकाय कीर्तिमसौ पञ्चसिन्धु-केसरी ॥५॥

## तं श्री-दयानन्द-यतिं नमामः

गौराङ्ग-दुःशासन-सम्प्रधृष्टां यो याज्ञसेनीमिव भारत-क्ष्माम् ।
दृष्ट्वा न सेहे प्रसभं च तस्या मुक्त्यै जनान् भीमवदाजुहाव ॥

राष्ट्रं स्वतन्त्रं त्रिदिवाद् वरीयो मृत्युर्वरं नैव तु दास्यमत्र ।
कर्तव्यमस्माकमतः स्वतन्त्रीभावाय यत्नो ननु भारतीयाः ॥

विस्मृत्य वेदान् विषयेऽपरत्र श्रमो वृथैवेति ततः श्रुतीनाम् ।
विधेयमत्राध्ययनं समस्तैर्जनैर्निजश्रेयसि बद्धकामैः ॥

मनुष्यसामान्यतया विधेया दया समस्ते ह्यपि दीनवर्गे ।
परेशपुत्रानभिवीक्ष्य सर्वान् घृणा न कुत्राऽपि जने च कार्या ॥

प्रभोः प्रसूताः सकला हि वेदा ज्ञानं तदीयं परमार्थ-सत्यम् ।
तदुक्तधर्मे च विधाय निष्ठां कल्याणभाजः सकला भवेयुः ॥

तत्त्वार्थबोधं न विनैव कश्चित् करोतु विस्रम्भमसारवाक्ये ।
अनाप्तवाचो जनयन्ति चित्ते भ्रमं महामोहकरं जनानाम् ॥

आर्या जगत्या गुरवः किलासन्नाचारमाश्रित्य तथार्यभावः ।
आचारमार्यत्वगतं प्रपन्ना विश्वं समस्तं कुरुतार्यमेतत् ॥

सन्देशमूर्जस्वलमेतमार्यान् सन्दिश्य यो मानवमङ्गलार्थी ।
जुहाव धर्मस्य कृते निजासूंस्तं श्री-दयानन्द-यतिं नमामः ॥

# पञ्चाप-वसन्त-पञ्चमी

प्रालेय-तुलाकोटौ तुलयति शिशिरं मनश्च मनुजानाम्।
कालः कठिनपरीक्षो जडतां पुष्कलतरां लब्धुम्॥

मरुता तुषारसङ्गाच्छिशिरतरेणाऽपि शोणिते घनता।
लक्ष्या तथा न शिशिरे नृणां क्रौर्येण या स्वजने॥

मुकुलति मानवहृदये मुकुलन्तु कथं रसाल-मुकुलानि।
निभृतं लपति समाजो मधुपानां नर्दिते घोरे॥

कलिकासु चटत्कारो गुलिका-स्फोटेन वधिरिते श्रवणे।
न पतति पतितोऽपि तथा व्रजति लयं मृत्युगीतेषु॥

परभृतकुलं न तनुते काकलिकां काककलकलाक्रुष्टे।
भुवनोदरे सुभीते काननमेवाश्रितं दूरम्॥

साशङ्कमेव सन्तो हन्त वसन्तोऽपि निजगृहे सन्तः।
सहसाऽसन्तो विहिताः क्वचन वसन्तो न वासन्तः॥

विरुवन्नपि कोऽपि खगो लभते यदि पञ्चमीं दशां सहसा।
पञ्चमकारकराणां भवतु कथं पञ्चमी नव्या?॥

विगतेषु नदेष्वपि ये संज्ञामात्रं यथापुरा [दधति।
जनशोणितशोणरुचः पञ्चनदास्ते पुनर्जाताः॥

केसररुचिरतिरुचिरा वलिपथपथिकांशुकेषु याऽतिष्ठत्।
सर्षपसुममञ्जर्यां झिण्टी-सुमनःसु वा साऽद्य॥

ग्रस्ता जलदघटाभिः पञ्चापवसन्त-पञ्चमी शोभा।
प्रालेय-हतं चौजो मोदः स्यात् कीदृशो लोके॥

# रवेः तनया

अवतरति नभसः
ककुभि, ककुभः-
पवन-पथगा, रश्मिरथगा,
का नु बाला ? तरलशाला,
तरुणतरुणा,
चारुणाऽरुण-वाससा सुतनुं पिदधती,
निहितनयनं जगदिदं कृपणं विदधती, !
चपलचपलैः,
मुखर-मुखरैः,
खेचरैः परिवार्यमाणा,
व्रीडयेव नताननना, दधती, कपोलं
ताम्रमथ, शिखरे तरूणां
न्यस्य शोणं करतलं सुश्रान्त-वपुषा,
चक्षुषा च निभालयन्ती
भूतलं सुतलं सुमसृणं
कीर्णकेशा, तिमिरमिव सञ्चारयन्ती,
मार्गयन्तीवात्मनो वरमाश्रयं
तनया रवेः
सन्ध्या ।

# दुराशा

का सखे ! जागर्ति
जगतीतलभुवाम् ?
लाभहेतोर्नित्यमुद्‌गूर्णभ्रुवाम्—
मानसे सततं जगति या,
सरल-पथिकं जलधिया—
बहु भ्रामयति मायामरीचिचिते—
ऽमितेऽपरिचिततमे मरुधन्वनः पथि ;
हिमकणानाचामयति तृषिता—
नमृतलवकामुकानथ
भूयसाऽपि निशामयति—
गगने कनकपङ्केरुहालीम् ,
कण्टकाचितसर्जिषि स्फुटगन्धशालिम् ;

भावयति सिकतासु रसधारामुदाराम् ,
कृपण-हृदये गतदये करुणामपाराम् ,
चाटुकार-मुखे गिरं वा सत्यसाराम् ,
अञ्चले सौदामिनीनां रीतिमचलाम् ,
प्रावृषि स्वर्निर्झरीलहरीं सुविमलाम्,
सरसकलरुतराविणीमपि वायसालीम् ,
भासुरामम्बुदघटामञ्जनसुकालीम् ;

दम्भिनामिह राजनयिकानामथो
उत्कोचलोलुपचेतसामधिकारिणां
वचने स्थिरत्वम्,
खल-हृदां स्वार्थैकवृत्तीनां सुहृत्त्वम्,
पुच्छलोलन-पादहेलन-प्रणिपतन-पर-पौरुषाणाम्
भुजगचरितानां च निजजनदूषिणाम्
अक्षिदानेनापि परशुभमोषिणाम्
वञ्चनैकविनोदिनाम्,
बन्धुनाशप्रमोदिनाम्,
कूटवृत्तीनां च वृत्तौ सौभगम्,
इभ्यभावे दुर्भगम्

कल्पयति जनहारिणी
विविधसङ्कटकुटिलपथसञ्चारिणी
वैतरण्यां स्वर्धुनीधीकारिणी
निखिललोक-प्रतारिणी
विश्वमात्रविहारिणी
मुग्धविस्रब्धेषु वज्रप्रहारिणी
वदसि किम् ?
सैषा दुराशा !

## उपालम्भः

अवतरसि किं नाधुना ?

प्रार्थितो देवाभवः किं केनचिन्नहि साधुना ?

किं प्रतिज्ञा विस्मृता ?

धर्म-हानिः सुजन-पीडा यदि भवति,

धृत-विविध-तनुरात्म-शक्त्याहं तु तेषां रक्षिता

संभवामि युगे युगे।

स्थापयामि जने जने

धर्ममखिलं दुष्ट-दमनः शुभ-कृतीनां शिक्षिता।

किं न वेदो दूष्यते ?

सम्प्रति सुकर्माक्रुश्यते,

प्लुष्यते देव-द्विजानां-मन्दिरम्,

मथ्यमानं जीवनम्,

लुण्ठ्यमानं यौवनम्,

हा! हृतं दुरितैः सरभसं धर्म-रत्नं सुन्दरम्!

द्वेष-गरलम्

दहति भुवनम्

लभ्यते नो क्वाऽपि हृदये शर्मदं प्रेमामृतम्।

कः शिवः सन्
घृणा-कलुषित-कालकूटं लोक-भद्रं भावयति
चात्मनाऽऽचामन् ?
मोहय स्वैः सुचरितैर्भूयो जगत्
लोकमव वा दैत्य-चरितात् हे प्रभो प्रह्लादकम् ।
बलि-हृता श्रीरद्य भूयो दिविषदाम्,
नित्यशो ब्रह्म-स्व-हरणं बलवताम् ।
यो भवान्—
एक-नारी-हरण-हेतोः
आत्मजो रघु-वंश-केतोः
ऋक्ष-वानर-बल-सहायो भस्मसात् कृतवान्
कनक - लङ्काम् ;
भृत - कलङ्काम्
स नु कथम्
नित्यशोऽपहृताबलानां करुण-क्रुणाक्रन्दनम्
हा शृणोति न ?
किं तनोति न
भारतं युद्धं प्रपन्नानां खलार्दित-साधु-नारीणां कृते ?'
विश्वमखिलम्
भवति विकलम्
भुवन-घस्मर-समर-लिप्साऽऽतङ्कितम्
प्रलय-समयाऽऽशङ्कया ।

करुणया कथमयि ! न तनुषे प्रेम-सन्देशं पुनः ?
कठिनं मनस्ते !
कुरु खलानां रुण्ड-मुण्ड-विखण्डनैः
कलि-विलयमथ कृत-युगस्योन्मीलनम् ।
भगवन्नमस्ते !
ननु समस्ते
जगति चारय भूय आत्म-रतिं प्रभो !
मधु-रिपो !
त्रुडित-जनमव भव-पयोधौ सपदि निज-पद-सेतुना,
अवतरसि किं नाधुना ?

## अहं नेता

अयमहं भो अयमहम् !
एकलोऽहं भूतले सर्वत्र नेता ।
मम कला विकला जगति प्रथिता
अहं तासां प्रचेताः ।
नाऽणुरपि चलतीह मम शक्ति विना,
का फलति चेष्टाऽपि मम भक्ति विना ?
अनुगुणो हि कला-कलापः
शमकरो जगतां
यथापः प्राणिनां
प्राणनाय, सकल कलदः सार्थकानाम्,

आत्मनः कामाय सर्वं प्रियमतः—
कुर्वे तदेव यदात्मनः स्यान्मे प्रियम्,
भूमता-हेतोर्न सृष्टिः किं न्वियम्?,
मम वचः श्रुतिरेव,
कर्मसु प्रथितेव,
मत्परः को भवति भुवि तासां प्रणेता?
वन्धदोऽहमकिञ्चनानाम्,
शर्मदः किल वञ्चकानाम्,
पोषयामि सदा विदधतः स्वां तनूं विभवं मनश्च
मदर्पितम्,
यास्तथासुरताभिलाषा असुरता जनताः
कृपामविनोदनं तासां
करोमि च
विपथगानां विनेता।
सेति नेति च शिक्षये
तदपरं तु न लक्षये
भक्षये सर्वं विरुद्धं यद् भवेत्
को भवेत्तस्माज्जगत्यस्मद्-विजेता?
शिष्यते परमार्थसत्,
दृश्यते व्यवहारसत्,
भुज्यते च कृतेन कृतयुगमित्यदः,
इच्छया मम तायते ज्ञानं तथा विज्ञानमपि,
क्रयते तदनुकूलं पुनस्तन्मत्कृता त्रेता।
किं नु सत् किमसच्च-
करणीये जनानाम्,
इत्ययं वादः पुरःस्थो मानवानाम्;

नाऽत्र परवचनं प्रमाणम् ,
न च परोक्षतयाऽनुमानम् ;
रोचते मह्यं यदेव, तदेव सत् ,
यत् प्रतीपं भासते वा तत्त्वसत् ,
द्वापरोऽयं पक्ष इह कः संशयक्रेता ?
मद्विरोधाज्जायते सर्वः कलिः ;
साधुदर्शी तत्र यस्तु स्यादलिः ।

मत्कृतेति चतुर्युगीयम् ;
मत्स्य-रीतिं संश्रये,
अथ वराहं प्रश्रये,
वामनः प्रबले नृसिंहोऽहं कनककशिपौ
तथा मतिदुर्बले ;
दशमुखे रामोऽथ कृष्णः प्रेमणि,
बुद्ध आचारे च पक्ष-स्थेमनि,
कल्किरपि पथि पोषकाणां शर्मणि,
कूर्ममतिमान् आत्महितबलभर्मणि,
इति विहित-सुपथावतारोऽहम्
च युगधर्माणां भवामि
यतो विवादी साधुनिर्णेता।
मत्परो नादौ न चान्ते,
लक्ष्यते मध्ये कृतान्ते,
सर्वशक्तिधरोऽथ माया-मानवोऽहम्
केवलोऽहं केवलो नेता ।

# लेखकस्य कृतयः

| | | |
|---|---|---|
| भारत-संदेशः | काव्यम् | उत्तर प्रदेश-पुरस्कृतः |
| महावीर-चरितम् | ,, | |
| अभिनवराग-गोविन्दम् | गीतसंग्रहः | |
| मत्कुणायनम् | व्यङ्ग्यकाव्यम् | |
| तरङ्गलेखा | कविता-संग्रहः | |
| श्री गुरुरविदासशतकम् | प्रबन्धकाव्यम् यन्त्रस्थम् | |
| हूण-पराजयम् | नाटकम् | उत्तर प्रदेश-पुरस्कृतम् |
| मायापतिः | एकाङ्कं नाटकम् | |
| अजेय-भारतम् | ध्वनिरूपकम् | |
| केसरिचङ्क्रमः | ,, | |
| साक्षात्कारः | भाणः | |
| अभिनव-नाट्यपञ्चकम् | एकाङ्कसंग्रहः सम्पादितम् | |
| पुरोधसः स्वप्नः | प्रहसनम् | |
| महापुरुषचरितावलिः | | |
| संस्कृत-निबन्धमणिमाला | | |
| संस्कृत-निबन्धरत्नाकरः | | |
| कालिदास-दर्शन (हिन्दी) | आलोचना-ग्रन्थ | उत्तरप्रदेश-पुरस्कृत |
| कालिदास-दर्पण ,, | ,, | |